# पारि शिक्षा

प्रणिपत्य जगन्नाथं वासुदेवं सनातनम्
गणाधिपं गिरां देवीं शिक्षां वक्ष्ये यथामति १
अथ वर्णसमाम्नाय उच्यते याजुषोऽत्र तु
आदितो नववर्णाः स्युः समानाक्षरका इह २
ह्रस्वदीर्घे सवर्णे स्तो द्वेद्वे न प्लुतपूर्वकम्
स्वराःषोडश तस्यादौ शेषो व्यञ्जनसंज्ञकाः ३
स्पर्शाः स्युर्व्यञ्जनेष्वाद्याः पञ्चविंशतिरीरिताः
पराश्चतस्त्रस्त्वन्तस्थाः षडूष्माणस्ततः परे ४
स्पर्शानामानुपूर्व्येण वर्गाः स्युः पञ्चपञ्च च
प्रथमाद्याः क्रमात्संज्ञा उत्तमः पञ्चमस्य तु ५
विसर्गोष्मद्वितीयाः स्युरघोषाः प्रथमा न हः
घोषवान् व्यञ्जनशेषः पर्यान्यध्यभिविप्रति ६
प्रावोपेत्युपसर्गाः स्युः वर्णः कारोत्तरो भवेत्
वर्णाख्या तद् व्यञ्जनानां स्यादकारव्यवेतकः ७
विसर्जनीयानुस्वारोपध्मानीयाश्च नात्र च
जिह्वामूलीयनासिक्याश्चैवैषां रस्य रेफकः ८
वर्णोत्तरस्त्रयाणां स्याद्ध्रस्वोऽकारो हलां भवेत्
ऋकारल्कारकौ ह्रस्वावनुस्वारोऽदिदुत्तथा ९
वर्गोत्तरस्तु वर्गाख्या प्रथमो भवतीत्यपि
इति परिभाषा

अथ वक्ष्ये वर्णसारभूतवर्णक्रमस्य च १०
शुद्धवर्णक्रमादीनां चतुर्णामपि लक्षणम्
तत्रादौ वर्णसारस्य प्रकारः सम्यगुच्यते ११
ध्वनिः स्थानं च करणं प्रयत्नो देवता ततः
जातिरङ्गं वर्णसंज्ञा व्यञ्जनानां विधीयते १२
अचामेवं प्रोच्यमाना ध्वन्यादौ च यथाक्रमम्
प्रयत्नदेवयोर्मध्ये मात्राकालः प्रकीर्तितः १३

अचां हलां केवलानामङ्गं न परिकीर्तयेत्
उदात्तादिस्वराणां तु ध्वन्यादीन् परिवर्जयेत् १४
तथापि देवताजातिगुणा रेखादिदर्शनम्
अध्येत्रङ्गाद्यवस्थां च षड्जादिस्वरकारणम् १५
सोत्पत्तिस्थानकं चैव स्वसंज्ञां चानुपूर्व्यशः
ये धर्माः शुद्धवर्णे तु शास्त्रोक्ता इह तानपि १६
संयोज्य तत्र तत्रैव भक्तिरङ्गादिकान् वदेत्
व्यञ्जनस्याष्टधा धर्मः स्वरस्यैव तथाष्टधा १७
नीचोच्चादिस्वराणां तु दशधर्माः प्रकीर्तिताः
व्यञ्जनोच्चादिसंयुक्तस्वरस्यैकस्य वै पुनः १८
षड्विंशतिरीरिता धर्माः क इत्येष उदाहृतः
इमं बुधा वर्णसारभूतवर्णक्रमं विदुः १९
इति द्वितीयोऽध्यायः

अथ शब्दस्योद्भवो वायुशरीरसमीरणात्
कण्ठोरसोश्च सन्धाने तस्योत्पत्तिः प्रकीर्तिता २०
प्रातिश्रुत्कानि तस्यात्र भवत्येतानि पञ्च च
उरः कण्ठः शीर्षमुखं नासिकाया बिलद्वयम् २१
नादस्य संवृते कण्ठे श्वासस्तु विवृते सति
हकारः क्रियते मध्ये वर्णप्रकृतयश्च ताः २२
अज्घोषवत्सु नादोऽनुप्रदानं भवतीत्यपि
हकारो हचतुर्थेषु श्वासोऽघोषेषु चैव हि २३
सभूयान् प्रथमान्येषु ह्येतानेव विदुर्ध्वनीन्
नातिव्यस्तमवर्णे हन्वोष्ठं नात्युपसंहृतम् २४
उपसंहरतीवर्णे तालौ जिह्वान्तरं सति
कार्य ओष्ठोपसंहार उवर्णेऽत्र विशेषकः २५
एकान्तरस्य कर्तव्यः प्रकृतान्नार्धमध्यकः
बर्स्वेष्वादौ तु जिह्वाग्रमुपसंहरति त्रिके २६
हनूपसंहततरे स्यातामोष्ठावकारवत्

ईषत् प्रकृष्टावोष्ठौ स्त अत्युपसंहृते हनू २७
जम्भ्यान् जिह्वान्तरान्ताभ्यामुत्तरान् स्पर्शयत्यपि
एकारे पूर्ववत् तालौ जिह्वामध्यमिवर्णवत् २८
नातिव्यस्ते हनू ओष्ठावोकारेऽत्युपसंहृतौ
करणं स्थानमेदेतोर्यदैदौतोः क्रमेण तत् २९
ऐकारौकारयोरादिरकारार्धमितीरितम्
एकेषां संवृततरकरणं भवति स्म तत् ३०
इकारोऽध्यर्धः पूर्वस्य शेषः स्यादुत्तरस्य उत्
अनुनासिकधर्माः स्युरनुस्वारोन्तमा अपि ३१
अचां यत्रोपसंहारः तत्स्थानं क्रियतेऽत्र तु
स्वराणां करणं विद्यादुपसंहरतीति यत् ३२
व्यञ्जनानां तु तत्स्थानं स्पर्शनं क्रियते यदा
करणं तद्धलां ज्ञेयं स्पर्शयत्यत्र येन तु ३३
हनूमूले कवर्गे तु जिह्वामूलेन वै तथा
स्पर्शयत्यथ तालौ चवर्गे जिह्वान्तरेण तु ३४
प्रतिवेष्ट्य टवर्गे तु जिह्वाग्रेणैव मूर्धनि
दन्तमूलेष्वधोभागे जिह्वाग्रेण तवर्गके ३५
उत्तरोष्टेऽधरोष्ठेन पवर्गे स्पर्शयत्यथ
तालौ यकारे वै जिह्वामध्यान्ताभ्यां तथैव च ३६
रेफे जिह्वाग्रमध्येन दन्तमूलोत्तरेषु ले
ओष्ठान्ताभ्यां वकारे तूत्तरदन्ताग्रकेषु च ३७
ऊष्माण आनुपूर्व्येण स्पर्शस्थानेषु पञ्च च
तेषां करणमध्यं तु विवृतं भवतीह तत् ३८
कण्ठं स्थानं स एवात्र करणं हविसर्गयोः
उरस्यत्वं हकारे तूत्तमान्तस्थापरे सति ३९
नासिक्या नासिकास्थाना मुखनासिक्यकाश्च वा
स्थानयोगो भवत्यत्र वर्गवच्चेति तेषु तु ४०

इति तृतीयोऽध्यायः

स्वरोष्मणां स्याद्विवृतः प्रयत्नस्त्वकारमात्रस्य तु संहृतत्वम्
ते स्पृष्टजन्याः खलुकादिमान्तास्तस्येषदादावथ चेच्चतुर्णाम् ४१
वर्गाद्वितीयश्चतुरीयवर्णोऽतिस्पृष्टजः पञ्चविधः प्रयत्नः
वाय्वग्निभूचन्द्रदिवाकराश्च वेदाक्षराणामधिदेवताः स्युः ४२
अवर्णवर्गादियषैत्समीरा इदैद् द्वितीयेन्द्रसवह्निसंज्ञाः
भौमा उवर्णोहल ओत्तृतीयश्चान्द्रा ऋवर्णो व इ औच्चतुर्थः ४३
सौर्या लृकारोत्तमशास्तथैवं पञ्चाशदर्णा ऋषिभिः सुगीताः
ब्राह्मास्तु वर्गप्रथमाः स्वराश्च क्षात्रास्तथा द्वित्रितुरीयवर्णाः ४४
वैश्या यकारादिचतुस्तथोत्तमाः शूद्रा अनुस्वारविसर्ग ऊष्मा
इति चतुर्थोऽध्यायः

यद्व्यञ्जनं तद्भजते स्वराङ्गं तदङ्गभूतं तु परस्वराङ्गम् ४५
पूर्वस्वराङ्गं त्ववसानवर्ति भवेत्परायुक्तमसंन्युतो नः
योगाद्यनुस्वारविसर्गभक्तयो रेफस्त्वृकारे परतस्तथा स्यात् ४६
पूर्वस्वराङ्गं न भवेद्य ऊष्मणः स्पर्शो यदि स्याद्विकृतिस्तथापि
भक्तिः पराङ्गं प्रचयात्परा स्यात् तथा धृते सत्यृपरे च रेफः ४७
यत्रासवर्णं तु परस्वरस्यान्तस्थोदयं व्यञ्जनमङ्गमेव
परे सति ह्यूष्मणि वै पराङ्गे स्पर्शो यमाश्चैव परस्वराङ्गम् ४८
इति पञ्चमोऽध्यायः

अचः स्वराः स्पर्शहलावघोषान्तस्थोष्मघोषव्यञ्जनमुत्तमाद्याः
तथैव वर्गप्रथमादि ह्रस्वदीर्घप्लुताद्या इति वर्णसंज्ञाः ४९
इति षष्ठोऽध्यायः

ह्रस्वश्च यावद्विपिने स्वभावात् किकीदवी रौति स एकमात्रः
काकोऽब्रवीत् तद्द्विगुणं तु कालं द्विमात्रकः स्यात्तु स एव दीर्घः
शिखी त्रिमात्रं वदति प्लुतः स्याद्ध्रस्वार्धकालं नकुलोऽर्धमात्रम्
उच्चस्य भूमिर्निहतस्य चाग्निः स्वारस्य चन्द्रः प्रचयस्य चार्कः ५१
नीचो विराड्ब्राह्मणजातिरुच्चः स्वारस्तु वैश्यः प्रचयश्च शूद्रः

इति सप्तमोऽध्यायः

स्वारोच्चकौ राजससात्विकौ स्तः धृतानुदात्तावपि तामसौ स्तः
५२

इत्यष्टमोऽध्यायः

विनिर्दिशेत्तर्जनिमध्यपर्वणयुच्चं च नीचं तु कनिष्ठिकादौ
अनामिकान्त्ये स्वरितं च निर्दिशेत् तं मध्यमायाः प्रचयं च
मध्यमे ५३
भक्तेर्भवेद्यत् स्वर उच्यते पृथक् तदङ्गुलीस्थानमुदात्तकादिः
स्वारं यदि ह्युच्चमिवोर्ध्वकं च ह्यनामिकामध्यमकान्त्ययोश्च ५४
तौ स्वारकम्पे स्वरितानुदात्तावनामिकान्त्यदिमरेखयोश्च
उदात्तनीचौ क्रमशः प्रदेशिनीमध्याद्ययोर्निर्दिशदुच्चकम्पे ५५
तद् व्यञ्जनस्यैव विरामकाले न स्यात् पृथक्स्थानमुपैति पूर्वम्
गोधेनुकर्णाकृतिदक्षहस्ते ह्यङ्गुष्ठकाग्रेण विदर्शयेज्ज्ञः ५६
स्वरेषु हस्ते च मनश्च दृष्टिं क्रमान्निवेश्यात्र नियोजयेत्तत्
हस्तेन वेदं य इमं त्वधीते वर्णस्वरार्थाननुचिन्तयन् सन् ५७
स ऋग्यजुःसामभिरेव पूतः तद्ब्रह्मलोके सततं महीयते
यद्गात्रदैर्घ्यं दृढता च या ध्वनेः तथाणुता कणठबिलस्य या च
एतानि कुर्वन्ति च शब्दमुच्चैर्यद्ध्रस्वता सा मृदुता स्वरस्य
या विस्तृता कणठबिलस्य चैताः कराणि शब्दं निहतं च नित्यम्
५९

इति नवमोऽध्यायः

गान्धारको मध्यम उच्चजातः षड्जर्षभौ द्वौ निहतोद्भवौ स्तः
स पञ्चमो धैवतको निषादः त्रयःस्वराश्च स्वरितात् तु जाताः
तत्रापि नित्यो निहतश्च तेऽत्र क्षैप्रो निपादस्वरहेतवः स्युः
प्रश्लिष्टकप्रातिहताभिधानौ स्यातां तथा पञ्चमकारणे तौ ६१
तथान्तिमस्वारकपादवृत्तौ स्यातां तथा धैवतहेतुभूतौ

गान्धारकस्याप्यथ मध्यकस्य क्रमादुदात्तप्रचयावपि क्रमात् ६२
अथानुदात्तौ यदि दीर्घह्रस्वौ हेतू च षड्जर्षभयोः क्रमेण ६३
उरश्च कण्ठं दशनांश्च तालु जिह्वां च नासां युगपच्च संस्पृशन्
तेभ्यो हि यस्मात् स्वर एष जायते षड्भ्यस्ततः षड्ज इतीह चोच्यते ६४
नाभेः सकाशाल्लघुवात उत्थितः कण्ठोत्तमाङ्गेन समाहतः सन्
यस्मान्नदत्यार्षभवत्सनीचस्वरेण तस्मादृषभः स्मृतः स्यात् ६५
गौरुच्चवान् धारयतीति तां वै गन्धेत्यजा सेति च रौति वा स्यात्
गान्धार एवोपरिभागजातप्रयत्नकोच्चारितधर्मयुक्तः ६६
मध्यस्थितत्वादपि तत्स्वराणां स मध्यमः स्वारकनीचयोश्च
नाभ्युत्थितो वायुरुरःप्रदेशहृत्कण्ठमूर्धश्रुतिमूलकेषु ६७
पञ्चप्रतीकेषु चरंश्च कण्ठादुत्तिष्ठते पञ्चम इत्यतः स्यात्
षड्जादिसप्तस्वपि मध्यमत्वात् काले पिकैः पञ्च्यत इत्यतो वा
यस्मात् स्वरान्तेन विशेषतोऽभिसन्धीयते स्वर्यत एष धैवतः
तानप्रधानत्वबलाल्ललाटप्रान्ते स पश्चाद्व्यवतिष्ठतीति ६९
अस्मिन्निषीदन्त्यच इत्यनेन निषाद इत्युक्तमतः स पश्चात्
व्याप्यावतिष्ठत्यखिलं च सन्धिप्रदेशमैभध्वनितुल्यरूपः ७०
प्रथममुदितशब्दः श्रूयते ह्रस्वमात्रः श्रुतिरिति विदुरेनं सा स्वराङ्गप्रधाना
विविधभरतविद्भिः प्रोच्यते तत्स्वराणां सरिगमपधनीति ह्यत्र संज्ञा मुनीन्द्रैः ७१

इति दशमोऽध्यायः

ज्ञेयोऽनुदात्तो हृदि मूर्ध्न्युदात्तः स्यात्कर्णमूले स्वरितं तु विद्यात्
सर्वप्रतीके प्रचयः स्मृतः स्यात् स्थानं स्वराणामिदमेव नान्यत्
स्वारः समाहार उदात्त उच्चैः भवेद्धि नीचैरनुदात्त एव
ते संहितायां स्वरितात्परे स्युरेकोऽथवा द्वौ बहवोऽनुदात्ताः ७३
पदस्थिता ये प्रचयस्वरात्मकं गुणं भजन्त्यत्र स उच्चकश्रुतिः

इत्येकादशोऽध्यायः

इवर्णकोतोर्यवकारभावे यः स्वर्यते क्षैप्र उदात्तयोः स्यात् ७४
स्थिते पदे यत्र तु नीचपूर्वेऽप्यपूर्वके वा यवपूर्वमक्षरम्
यत्स्वर्यते तत्स्वरितं तु नित्य एवेति विद्यान्न यथाक्रमोऽत्र ७५
नानापदस्थेऽपि च सांहितेन यः स्वर्यते प्रातिहतः स उच्चैः
लुप्ते पृथग्भूतपदस्थितोच्चात् परेऽनुदात्ते यदि तर्ह्यकारे ७६
पूर्वोच्चकोऽयं स्वरितस्वरः स्यान्नाम्ना भवेत्सोऽभिहतश्च पश्चात्
उच्चादुकारादनुदात्तधर्म उकार ऊर्ध्वे सति सन्धितोऽत्र ७७
ऊभाव एष स्वरितश्च तत्र प्रश्लिष्ट इत्युच्यत एव सद्भिः
या स्यात्समाने तु पदे विवृत्तिस्तस्याः परे यः स्वरितश्च लब्धः
स पादवृत्ताह्वय एव नान्यः एतद्विवृत्तेरपि चार्धमात्रः
पदे समाने य उदात्तपूर्वस्तैरो अधो व्यञ्जन उत्तरः सः ७९
क्षेप्रे च नित्येऽतिदृढः प्रयत्नो दृढोऽतिपूर्वोऽभिहते प्रयत्नः
प्रश्लिष्टके प्रातिहते च कार्यः स्वारे तथैवातिमृदुः प्रयत्नः ८०
स्यात्पादवृत्ते खलु सपृमे च स्वारे भवेदल्पतरः प्रयत्नः
इति द्वादशोऽध्यायः

प्रश्लिष्टनित्याभिहताश्च यत्र क्षैप्रस्तथोच्चस्वरितोदयाः स्युः ८१
तत्र प्रकम्प्यन्त इमे हि सन्धौ पूर्वस्वरान्ते निहतं च कुर्यात्
स कम्प एवात्र यथा हि दीर्घं तथोच्चरेद्ध्रस्वमपि प्रकम्पे ८२
कम्पो द्विधा स्वार उदात्तकश्च स्वाराख्यकम्पास्त्विह संहितायाम्
शाखान्तरेष्वेव उदात्तकम्पाः पुनर्द्विधा तौ खलु ह्रस्वदीर्घौ ८३
तस्यादितः स त्र्यणुमात्रकालस्वारस्तदन्त्ये निहतेऽणुमात्रः
उच्चस्तथा स त्र्यणुमात्र आदौ तस्यान्त्यभागेऽप्यणुमात्रनीचः ८४
संमेलने चैव तयोर्द्विमात्रः स एव कम्पः स्वरितोच्चयोश्च
क्षैप्रस्य कम्पस्तु चतुर्भिरादूदेदैद्भिरेङोऽभिहतस्य कम्पः ८५
प्रश्लिष्ट ऊत्वात्कथितोऽत्र नित्यः आतोच्यतेऽसौ क्वचिदेङ ओङः
एङ्कूपनित्यौ स्त उदात्तकम्पावित्थं कृतः कम्पविनिर्णयश्च ८६
इति कम्पविनिर्णयो नाम त्रयोदशोऽध्यायः

स्वरोत्तरोष्मरायपि पूर्वरेफलकारयोश्च स्वरभक्तिसंज्ञा
स्यादर्धमात्रा रलयोस्तदादावन्ते स्वरांशावणुमात्रयुक्तौ ८७
रलौ तु यस्मात्स्वरपादयुक्तौ तस्मात्तयोश्च स्वरभक्तिसंज्ञा
पूर्वांशपादद्वययुग्घलन्ता स्यात्संवृताख्या हपरे तु भक्तिः ८८
परांशयुक्ता शषसेषु भक्तिः परेष्वजन्ता विवृताभिधाना
पूर्वस्वराल्पत्वकमित्वमुत्वं त्रयं विसृज्यैव वदेद्धि भक्तिम् ८९
करेणुसंज्ञा रहयोश्च योगे सा कर्विणी स्याल्लहकारयोगे
योगेर्षयोर्हंसपदेति विद्याद्रेफे सति स्याद्धरिणी शसोर्द्ध्वे ९०
भक्तिस्तु या रेफसकारयोगे तां हस्तिनीति प्रवदन्ति केचित्
स्य धूर्षमित्यत्र तु या च भक्तिः सेयं स्वतन्त्रा स्वरभक्तिरुक्ता ९१
सा हारिता स्याल्लशयोस्तथैव क्रमेण सप्तस्वरभक्तयस्ताः
इति चतुर्दशोऽध्यायः

उदाहरिष्ये स्वरभक्तयस्ताः क्रमात्करेणवादि च हारितान्तम् ९२
बर्हिर्यजत्यर्हति गार्हपत्यं करेणुमल्हा इति कर्विणी स्यात्
सहर्षभा हंसपदा सुवर्ष दर्शश्च पर्शुर्हरिणी च बर्सम् ९३
तद्बर्समित्युत्तरत्र तु हस्तिनी वा ऋतस्य धूर्षेति तथा स्वतन्त्रा
सहस्रवल्शाः शतवल्श हारिता एवं च सप्तस्वरभक्त्युदाहृताः
इति पञ्चदशोऽध्यायः

दीर्घाच्च ह्रस्वात्स्वरितादनन्त्यात् पृथग्भवेद्भक्तिरसांहिता च
पृथक्स्वरं यो भजतीह वर्णः पृथक् च भक्तिर्निहते न होर्ध्वे ९५
इति षोडशोऽध्यायः

अत्रो भयोश्च स्वरयोरसन्धिः विवृत्तिरित्युच्यत एव तज्ज्ञैः
क्रमेण वत्सानुसृतिश्च वत्सानुसारिणी पाकवती पिपीलिका ९६
वैशेषिका चोभयदीर्घिका च स्यान्मध्यमा चैव सवर्णता च
इत्येवमष्टौ हि विवृत्तिसंज्ञास्तासां स्वरूपं खलु वक्ष्यतेऽत्र ९७
या ह्रस्वपूर्वोत्तर दीर्घिका स्यात् सा तर्हि वत्सानुसृतिः समात्रा

ह्रस्वोत्तरा यत्र तु दीर्घपूर्वा वत्सानुसारिण्यपि सैकमात्रा ९८
यस्या विवृत्तेरुभयत्र ह्रस्वः पादोनमात्रा खलु पाकवत्या
क्रमेण पूर्वोत्तरयोश्च दीर्घौ स्त उच्चनीचौ पदकाल एव ९९
विसर्जनीयश्च न यत्र दृश्यते यस्यां च सन्धौ स्वरितं च लभ्यते
सवर्णभूतावपि तौ भवेतां सा पादमात्रा च पिपीलिका स्यात्
स्यातां विवृत्तेरपि यत्र यस्याः आद्यन्तयोश्चाप्यसवर्णदीर्घौ
मध्ये विसर्गो यदि वापि मा वा वैशेषिका मात्रिककालयुक्ता
आद्यन्तयोश्चैव सवर्णदीर्घौ स्वरो न सन्धानपदे विसर्गः
एवंगुणा यत्र भवन्ति यस्याः स्यादेकमात्रोभयदीर्घिका सा १०२
सवर्णदीर्घावुभयत्र यस्या उदात्तनीचौ भवतः क्रमेण
यद्यस्ति चेत्तत्र विसर्जनीयः स्वारोऽपि सन्धौ च समात्रमध्यमा
आदौ तथान्ते च सवर्णदीर्घौ विभज्यमाने सविसर्जनीयः
न तत्र जातु स्वरितश्च तस्या वृत्तिः समात्रा हि सवर्णदीर्घौ १०४
यद्वाक्तिमध्ये त्वनुनासिकः स्यात् तत्रानुनास्यस्तु सपादमात्रः
सा व्यक्तिरप्यत्र सपादमात्रा पूर्वोक्तमेवात्र च नाम तस्याः १०५
इति सप्तदशोऽध्यायः

उदाहरिष्यत्यधुना विवृत्तयो वत्सानुसृत्यादि सवर्णतान्तम्
त आ वहन्ति प्रतरां न आयुः स आयु वत्सानुसृतिस्त एनम् १०६
ते अस्य यो वा अयथा च वत्सानुसारिणी वा इयमग्र आसीत्
स इज्ञनेन प्रऽउगं न इन्द्रायांहोमुचे पाकवती म इन्द्रः १०७
वा आदि वा आह्रियमाणरण् चे ते एनमभ्यत्र पिपीलिका स्यात्
१०८
ता एव सो एव तथा च कक्षीवां औशि वैशेषिकसंज्ञिकाः स्युः
वा आप ते एव तथैव तस्या आवृश्च्यथो ओभयदीर्घिका स्यात्
१०९
भवन्ति वा आग्रयणाग्रवेद्या आदंश्च या आविवि मध्यमाः स्युः
वा आशता आस च आप्रिदिव्या आपस्तु ता आहु सवर्णदीर्घौ
इत्यष्टादशोऽध्यायः

यशो ममा चैव सुमङ्गलासु श्लोकोपहूता च तथैव यद्घ्रात्
एते हि रङ्गाः खलु पञ्च तेषां वक्ष्यामि वर्णक्रमलक्षणं तत् १११
रङ्गे मुखे व्याघ्ररुतोपमं स्यात् मात्राद्वयं हृज्जनितं त्वनास्यम्
अथैकमात्रस्त्विह कांस्यघण्टानादः सकम्पः स तु मूर्धजातः
नासिक्यरन्ध्रद्वयनिस्रुतोऽन्त्ये स्यादेकमात्रः स तु काकली स्यात्
सौराष्ट्रिकागोपवधूः सुकण्ठस्वरेण तक्रा३ इति भाषते यथा ११३
तथा समुच्चार्य वदेत्स्वकालाद्रङ्गश्च कम्पः खलु वर्धते सः
इत्येकोनविंशोऽध्यायः

देवा उ ता इम्यमृवा अव स्वां अहं कठे स्युः खलु रङ्गदीर्घाः
एते द्विमात्राश्च सपादमात्रनासिक्ययुक्ताश्च विवृत्तिपूर्वात्
सपादमात्रत्रितये हदि स्यादेकस्ततो मूर्धनि चार्धमात्रः ११५
भवेद्विशेषो मुखनासिके च व्यक्तेश्च तस्या अपि साणुमात्रः
इति विंशोऽध्यायः

अच्पूर्वकं व्यञ्जनमेति हल्परे स्पर्शो द्विवर्णं लवकारपूर्वः ११६
परं च हल्यत्स्वरपूर्वरेफाद् द्वित्वं परे तत्सति वर्णमात्रे
द्विवर्णमाप्नोति पदान्तवर्ती ङो नः स्वरोर्ध्वोऽपि च ह्रस्वपूर्वः
यजुष्यनुस्वार इहापि यत्र भवेत्तदाद्यर्धगाकारयुक्तः
सरूपशान्तिः शपरो यदि स्यात् न स्याद्गकारस्य तु केवलाख्यः
११८
ह्रस्वादनुस्वार इयाद्द्विवर्णं योगे परे तस्य च मात्रिकः स्यात्
योगादिरप्यत्र तथा द्विरुच्यतेऽनुस्वारपूर्वोऽप्यथ चागमः स्यात्
इत्येकविंशोऽध्यायः

यद्व्यञ्जनं येन निमित्तकेन द्विवर्णमाप्नोत्यधुनैव तेन
पूर्वागमो ह्यत्र भवेद्द्वितीयचतुर्थयोश्चैव यथाक्रमेण १२०
धामातिभूतेपरमोपसर्गपाथ एषआत्यूर्ध्वगताञ्छखीब्भुजाः
एते त्रयस्तत् प्रथमं तृतीयं पूर्वागमं प्राप्नुयुरेव धाम १२१

क्वचित्समाने स्वरयोस्तु मध्ये लक्ष्यानुसारद्वितयं हलः स्यात्
पदे द्वितीयस्य तुरीयकस्य पूर्वागमः स्याद्धि तथैव लक्ष्यात् १२२
शात् तैत्तिरीये खलु नस्य ञः स्यादादेश एवात्र न काठके ञः
हान्योष्मणः स्पर्शपरात्परस्तत्स्पर्शस्य संस्थान इहागमः स्यात्
सकृच्च वर्गप्रथमः स चाभिनिधीयतेऽत्राभिनिधान उच्यते
ङान्ते परे सति तर्ह्यनन्तात् कगौ द्वावपि चागमौ स्तः १२४
स्पर्शाद्यदोष्माविकृतेरनुत्तमात् स्यादुत्तमोर्ध्वे सति चानुपूर्व्यात्
नासिक्यसंज्ञा इह चागमाः स्युः एतान् यमानेव वदन्ति केचित्
पदान्तगो व्याप्य पदान्तवर्तिद्वितीयवर्णं प्रथमोऽश्नुते स्म
सषौ परौ चेदपदान्तवर्तिनौ द्वितीयकत्वं प्रथमस्य पशौ १२६
ह्रस्वात्परो नाद इह द्विरूपो वर्णक्रमे तं सकृदुच्चरेज्ज्ञः
द्वित्वं निवर्तेत यदा प्रसक्तौ पूर्वागमो वापि तदुच्यतेऽत्र १२७
ईदैदयो यश्च विसर्गरिफावूष्मा स्वरे वा प्रथमोत्तरे च
स्पर्शे परे वश्च लकार ऊष्मस्पर्शोत्तरस्थेन भजेद्द्विरूपम् १२८
परे सवर्गीय अनुत्तमे हल् द्वित्वं सवर्णोत्तर एव नेयात्
स्पर्शोत्तरश्चेद्यवलोत्तरो मस्तस्येति तेषामनुनासिकं च १२९
दीर्घात् परोऽन्तगो नो वे वा यहयोस्तथैव च
शषसेष्वच्परेष्वत्र विसर्गो यत्र दृश्यते १३०
वैकृततं प्राकृतत्वं क्रमात् स्याच्छ्लिष्ट एव हि
हकारान्नणमा यत्र दृश्यन्ते परतस्तदा १३१
नासिक्यत्वमुरस्यत्वं हस्य तत्र द्विरुच्यते
विवृत्तिमध्ये यत्र स्याद्विसर्गः सोऽर्धमात्रिकः १३२
विरामश्चैकमात्रः स्यात्तस्य संज्ञा यथाविधि
प्राग्यद्यघोषवर्णाभ्यां विसर्गः कपवर्गयोः १३३
क्रमात्स जिह्वामूलीय उपध्मानीय उच्यते
वर्णस्य स्वरहीनस्य वाचकं नाम उच्यते १३४
वर्णक्रमस्याध्ययने न वदेदन्यसंज्ञिकम्

इति द्वाविंशोऽध्यायः

शुद्धवर्णे त्वचामादौ यद्युच्चादिः प्रयुज्यते १३५
संविद्यात्स्वरवर्णं तदेतदेवास्य लक्षणम्
वर्णे च स्वरमात्राङ्गवर्णसारेषु नित्यशः १३६
कारोत्तरस्वरेभ्योऽर्वाङ् न च संधिः कदाचन
उदात्तादिस्वरात् पूर्वं स्वरवर्णे च मातृका १३७
यदि युज्येत नाम्नासौ मातृका वर्ण उच्यते
तस्मिंस्तु मातृकात् पूर्वमचां संज्ञोच्यते यदि १३८
हलामादावङ्गसंज्ञा नामान्यस्याङ्गवर्णकः
इति त्रयोविंशोऽध्यायः

यत्र यत्र व्यञ्जनानां पौर्वापर्यविधानतः १३९
यथाङ्गलक्षणं प्रोक्तमङ्गवर्णे तथा वदेत्
व्यञ्जनानामङ्गवर्णे त्वङ्गं भूतोत्तरं वदेत् १४०
हल्संज्ञिकेति कण्ठोक्त्या वदेत् तन्नाम वै ततः
आदौ स्वराणामच्संज्ञा तत्तन्मात्रा वदेत् ततः १४१
अथ स्वरानुदात्तादीन् तन्नाम च वदेत् क्रमात्
व्यञ्जनं यद्यवसितं तस्य मात्रा विधीयते १४२
यत्रानवसितं तत् स्यात् तन्मात्रा तत्र नेष्यते
अनेकवर्णसंयोगो यत्रैकव्यञ्जनात्मकः १४३
स्यात्पूर्वाङ्गो भवेत् तत्र पूर्वाङ्गादि सकृद् वदेत्
एकव्यञ्जनसंयोग उभयाङ्गो भवेद्यदि १४४
पृथगङ्गं प्रयुञ्जीयात् पौर्वापर्यक्रमात् तदा
यदुक्तं केवले वर्णे शास्त्राद् द्वित्वागमादिकम् १४५
तत् सर्वमङ्गवर्णोक्तौ प्रयुञ्जीयाद्यथाविधि १४६
इति चतुर्विंशोऽध्यायः
पारि शिक्षा समाप्ता

# References:

Chandra, Lokesh, ed., *Sanskrit Texts on Phonetics: A Collection of Śikṣā Texts*, Śata-Piṭaka Series: Delhi, 1981, pp. 317-394.

Stautzebach, Ralf, *Pāriśikṣā und Sarvasaṁmataśikṣā: Rechtlautlehren der Taittirīya-Śākhā*, Franz Steiner Verlag: Stuttgart, 1994.

"Pañca-Varṇa-Krama-Lakṣaṇam," Staats-Universitaets Bibliothek, Hamburg, Germany, Grantha script on palm leaves, 4 folios, text #22 in Palm-leaf bundle III 8/133, approx. 142 verses.

"Varṇa-Krama Śikṣā," Mysore Governmental Oriental Manuscript Library, Telugu script on palm leaves, 10 folios, (P 4772/22).